सन्न्यस्तं मया सन्न्यस्तं मया सन्न्यस्तं मया इति, त्रि रुक्त्वोर्ध्वं वैणवं दण्डं कौपीनञ्च परिगृह्णीयात्। औषधवदशनमाचरेदौषधवदशनमाचरेत्। अभयं सर्वभूतेभ्यो मत्त इति ब्रूयात्। सर्वं प्रवर्त्तते मत्त.। सखासि मा गोपाय, ओज. सखासि, इन्द्रस्य वज्र इति। ब्रह्मचर्य्यमहिंसाञ्चापरि-

---

इदानीं सुखत्यागार्थं सन्न्यासमेवाभाह, सन्न्यस्तं मया सन्न्यस्तं मया सन्न्यस्तं मयेति। त्रि रुक्त्वेति पाठेनैव त्रित्वे सर्व्वे त्रिरितिवचनं भाषाणामपि त्रि पाठार्थं तथा यथाम्नाय, एतौ त्रयोऽपि प्रैषा सव्याहृतिकाश्चिभिर्मन्द मध्यमोत्तम स्वरैरुच्चारणीया, लोकत्रय श्रावयितु त्रिरभि धानं प्रैषोच्चारणेन यद्यत् तत्पुनरभिलपन् बध्यो मिन्द्यो बध्यश्चेति बोधयितु सम्यक् अपुनरादेयतया न्यस्त सन्न्यस्त मित्यर्थं। प्रैषानन्तर 'मत्त कृतप्रैषात् सर्वभूतेभ्योऽभय मस्तु। कुतोऽभय दत्तमित्यत आह, सर्वं प्रवर्त्तते मत्त इति। मत्त एव ब्रह्मणो यत सर्वं प्रवर्त्तते, न हि जनयितुरेव भय युक्तम् इति भाव ।

इदानीं दण्डादाने मन्त्रमाह। सखेति। त्व 'सखा अवन्धकोऽसि 'मा' मा गोसर्पादिभ्यो गोपाय, ओजोनाम शुक्रस्य परिणामो धातूनामष्टमी दशा तत्फल तेज शरीर मसि, सखेति यत् त्व सखा इष्टे कार्य्येषि 'असि' भवसि, 'इन्द्रस्य परमेश्वरस्य 'वज्र' परिभयहरोऽसि एतावत् प्रतीक मन्त्रस्य शाखान्तरे सम्पूर्णं पठितम्। 'इन्द्रस्य वज्रोऽसिवार्त्रघ्नं

ब्रह्मचर्य्यमहिंसाञ्चापरिग्रहञ्च सत्यञ्च यत्नेन हे रक्षत, हे रक्षत, हे रक्षत ॥ ३ ॥

अथातः परमहंस परिव्राजकानामासन-शय-

---

यदि मे अथ यत्नाय तविचारय इति' इतिशब्द इत्यस्य वधो ऽग्निरिति मन्त्र प्रतीकार्थं । वि कृत्वोर्द्धं वैणवं दण्डमित्यनेन मन्त्रेण वैणव दण्डम् 'ऊर्द्धम्' उपरि दक्षिणकरे निधायेत्यर्थं, अत एव मन्त्रवासोपनिषद्युर्द्ध गोपायुरिति दण्डविशेषणम्, कौपीन लज्जाच्छितुत्वात्, कूप प्रवेशनमर्हति कौपीन पुल्लिङ्ग, तन्मात्राच्छादकत्वाद् यतिवासोऽपि कौपीन शालीने अपृष्टा कार्य्ययोरिति साधु, तदपि परिग्रहेत्। औषधवत् प्रीति विना शरीरस्थित्यर्थम् 'अशन' भोजनमाचरेत्, अभ्यासस्त्वा दरार्थं, सर्वथा रसासक्ति न कुर्यात्, त्यागवैराग्यादित्या दर ॥ २ ॥

इदानीं यदभावे महापातकिवत् पातित्य, तानि पञ्चा वश्यकान्याह, ब्रह्मचर्य्यमिति। युवतीनां स्मरण कीर्त्तन केलि प्रेक्षण गुह्यभाषण सङ्कल्पाध्यवसाय क्रिया निर्हेति वर्जनं ब्रह्म चर्य्यम्, अहिंसा च मनो वाक् काय कर्मभिर्भूतानिष्टवर्ज नम, 'अपरिग्रहम्' अन्नपरिग्रह व्यतिरिक्तवर्जनम्, सत्य प्रियहितप्रमाण इष्टार्थवचनम्, द्वौ चशब्दावुक्त समुच्चयार्थौ, तृतीयोऽनुक्तास्तेय समुच्चयार्थं, एतानि पञ्च यत्नेन हे यतयो रक्षत रक्षत पुनरेव द्वयो गु तृतीये पर्य्याये हे रक्षतेति स्तुतिरुक्ते गुल्फयौ, सर्वानुक्ते आवश्यानि प्रजापति विरुक्ति वादतार्थौ, प्राणात्ययेऽप्येतानि न परित्याज्यानीति, इति शब्द उपदेशसमाप्त्यर्थं, हे शब्द उच्चैःस्वराभिमुखीकरणे, हे मुमुक्षवो ब्रह्मचर्य्यादीनि रक्षत पालयतावश्यमित्यर्थं।

नाभ्यां भूमौ । ब्रह्मचारिणां स्वपात्रं वालाबु-पात्रं दारुपात्रं वा । काम क्रोध-लोभ मोह-

---

इदानीं ब्रह्मचर्य्यादि पञ्चकस्थैर्य्यादि परमहंसधर्म्मं पुनर्विशेषेणाह, अथात परमहंस परिव्राजकानामिति । धर्म्मा वक्ष्यन्त इति शेष । 'अथ' शब्दोच्चारण दण्डग्रहणानन्तर यतो ब्रह्मचर्य्यादिरक्षण विना न सिद्धिरतो धर्म्मा वक्ष्यन्ते, कीदृश ? 'परं' केवलम् ब्रह्म स न ततोऽन्योऽहमिति निश्चिता परमहंसा, परिव्रजन्ति सर्ववन्ध परित्यज्य परिव्राजका, ते च ते च तेषाम्, आसन शयनाभ्या भूमाविति, भूमावेवासनेन दिवा, शयनेन रात्रौ काल नयेदिति शेष, 'आसन' स्वरूपावस्थान, 'शयन' बाह्यविषय विस्मृति, तदुक्त,

"यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने" इति । तेन पर्य्यङ्कादि परित्यागेऽपि स्वरूपविस्मृतौ विषयचिन्तन चानर्थायैवेति भाव । ब्रह्मचारिणामिति । तेषामेव विशेषणम् उपलक्षणमेतत्, अहिंसासत्यास्तेयापरिग्रहवतामित्यपि ज्ञेयम् ।

उदकग्रहणार्थं पात्रमाह, स्वपात्र वालाबुपात्र दारुपात्र चेति । 'अलाबु तुम्बीफलम्, घटादिपात्रस्तु वर्ज्जित, पाणिपात्रञ्चेति, वा शब्दोऽनास्थाया यथालाभम् तैजसानि पात्राणि स्युरिति च तत्र पुत्राभिवादिना वाक्यानि त्याज्यानि उक्तानि, येनाथ दण्डमित्यादिना बाह्यानि बाह्यानि स्वल्पक च्छत्रेत्यादिनान्तर बाह्यमुक्त, सम्प्रत्यान्तराणि त्याज्यान्याह, काम क्रोधेत्यादिना । 'काम' श्रोत्रेन्द्रियस्पर्शाद्याभिलाषो वा, 'क्रोध' कामाभिघातेन कामातुर दहनात्मक, 'लोभ' उपात्तस्यात्यागिता, 'मोह' नित्यानित्यविदु स्वरूपानि

**दम्भ-दर्पासूया-ममत्वाहङ्कारानृतादीन् परित्य-जेत्, वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यति-श्चरेत्, द्वावेव वा चरेत् द्वावेव वा चरेदिति ॥४॥**

---

शरीरे नित्यत्वधि सुखात्मबुद्धि, 'दम्भ' धर्मध्वजित्व, 'दर्प' गर्व धनादिमानेन स्वात्मन्यधिकबुद्धि, 'असूया' परोत्कर्षासहि ष्णुता; 'ममत्व' परस्मिन् स्वसम्बन्धित्वबुद्धि, 'अहङ्कार' जाति गुण कर्माभिमान, 'अनृतम्' अप्रियाहितप्रमाण दृष्टार्थवचनम्, आदिशब्देन दर्पं शोकादि द्वन्द्वानि गृह्यन्ते, कामादीनां गणानां ग्रह तत आदिशब्देन ग्रहणमिति, तानि परित्यजेत् न पुन स्मरेत्।

परिव्राजक सञ्चरणा परितो भ्रमणकर्तृत्वे प्राप्ते तदपवाद माह, वर्षासु ध्रुवशील इति। अग्नेऽष्टावित्युक्ते पक्षचतु पक्षे चत्वारो मासा वर्षा, तासु ध्रुव शीलमस्य, ध्रुव इत्येव स्थिते शोनपत्रण कोटाकुलायां भूमौ सर्वथाटननिषेधार्थम्, शेषे ष्वष्टसु अटनमित्यनुजानाति, अष्टौ मासानेकाकी यतिश्चरे दिति।

"बहूनां कलहो यस्मात् द्वयोर्वार्त्ता भवेदत ।
एक एव चरेद्विद्वान् कुमार्या इव कङ्कणम्" ॥ इत्युक्तेः ।

समानशीलत्वे द्वितीयमनुजानाति, द्वावेव वा चरे दिति। अध्यात्म कथारस श्रमने तु द्वावेव मिलित्वा चरेत्। चरतामिति वक्तव्ये चरेदित्युक्तिरेकचित्ततामावेदयितुम् वा प्रश्नोऽनाख्यातम्। एकचित्तता दशानामपि जायते पाण्ड वाना महात्मनाम्। एवकारो मित्रशीलत्वाद्द्वयम्। वाक्याभ्यास आदरार्थ ॥ ४ ॥

खलु वेदार्थं यो विद्वान् सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत्, पितरं पुत्रमग्न्युपवीतं कर्म कलत्रञ्चान्यदपीह। यतयो हि भिक्षार्थं ग्रामं प्रविशन्त्युदरपात्रं पाणिपात्रं वा। ओं हि ओं हि ओं हीत्येतदुपनिषदं विन्यसेत्, खल्वेतदुप-

---

मध्यमे यथा आश्रम क्रमनियमो नास्ति, तथा उपनयनस्यापि नास्तीत्याह, खलु वेदार्थमित्यादिना। वेदार्थं विद्वानिति न लोकेति षष्ठीनिषेध ; सोपनयनादिति सन्धिरार्षं ; 'तानि' पूर्वोक्तानि, एतानीति पाठे वक्ष्यमाणानि, प्राग्वा त्यजेदिति, यस्तु प्रागधीयानस्य सुकृत वशादुपनयनसंस्कारेणापि केनचिन्निमित्तेन विज्ञातवेदार्थ, स उपनयनात् पूर्वमपि त्यजेत्, तथा स्वार्थन्तो हि भरतैतरेयक दुर्वासो याज्ञ शुकादय, प्राक् त्यागपक्षे यानि बाल्येन दुस्त्यज्यानि, पितरं त्यजेत्, पुत्र यतिपिता त्यजेत्, अग्न्याद्युपवीत विषय; च शब्देन समुचित सामान्येनाह, अन्यदपीहेति। 'अन्यत्' गृहक्षेत्रादि कम्, अपिशब्दाद् यद्यस्य सम्भावितम् तदपि त्यजेत्।

यतेरशनप्रकार कर्तव्य इत्याह, यतयो हीति। विशेष विधि शेषनिर्बन्धकस्य ग्रामं प्रवेष्टव्यमिति यत्; तेन अन्यदथाम न प्रविशन्तीत्यर्थं। अस्यपात्रबहिष्कारार्थं न सहपात्रमित्याह, पात्रीति। पाणिपात्रमुदरपात्रञ्चेति कर्मधारयो, 'पाणि' अर्थानि पाणिर्वा पात्रम्, उदरं पात्रार्थे मुखप्रसारणेन पात्रं, वा शब्दोऽनास्थायाम्, तेन भूम्यादिकमपि भिक्षादौ।

अथ मन्त्रमाह ओं हीति। मन्त्रार्थस्तु 'हि' निश्चित

निषद विद्वान् य एव वेद, पालाशं बैल्वमाश्वत्थं दण्डमजिनं मेखलां यज्ञोपवीतञ्च त्यक्त्वा शूरो य एव वेद । तद्विष्णोः परमं पदं सदा पश्यन्ति

---

सर्वम् 'ओं' परमात्मैव, निराकृतिर्जपप्रकार प्रदर्शनार्थम्, ओङ्कारस्यैव प्राधान्येऽपि द्विशब्द सन्निव्याहृत्यर्थं । तस्य कर्णौ ज्ञान् न्यासानपि कुर्यादित्याह, एतदुपनिषद विन्द्यदिति । उपनिषद शब्दोऽकारान्तो नपुंसकम, यद्वा एवा चासाउप निषद्य ता रहस्यज्ञानमुपनिषत् उपचारात् मन्त्रोऽपि। न्यास प्रकारस्तु प्रणवकल्पादवसेय ।

उपासनफलमाह, विद्वान् य एवमिति । ब्रह्मचर्य्यादि भिर्य 'एव' एकाक्षरमोङ्कार शब्दतोऽर्थतश्च वेद विदित्वा ध्यास्यति, स विद्वान् भवति, यद्वास्य ब्रह्म साक्षात् करोतीत्यर्थं ।

इदानीं ब्रह्मचारिणा सन्यासे कर्त्तव्ये पूर्वदण्डेनैव दण्डित्वनिरासार्थमाह, पालाशमित्यादि । अथ दण्डस्य पलाशादि प्रकृतित्वं त्रैवर्णिकाभिप्राय, द्वयोरनधिकारेऽपि ब्राह्मण स्यैव पूर्वलाभे उत्तरग्रहण सूचनार्थम् ।

"सन्यासो ब्राह्मणस्योक्तो नान्यवर्णस्य कस्यचित्" इति स्मृतेः ।

अजिन मेखलयोः पूर्वमनुक्तत्वादुपादानम् । उपवीतञ्च दण्डबन्धनयज्ञ निरासार्थं यज्ञोपवीतञ्चत्युक्तम्, चकारो लौकिकाग्नि समिदाज्यादीना समुच्चयार्थं, त्यक्त्वा' परित्यज्य शूर अन्यथानधिकार भवेदिति शेष , न हि त्यागमात्रेण किन्तु शूरो मनोऽरिजये स्यात् तदुक्त,

"न हि सन्न्यसनादेव सिद्धिं समधिगच्छति" इति ।

क शूर ? इत्यत आह, य एव वेदेति, 'य' विदित-

सूरयः दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदमिति, एवं निर्वाणमनुशासनमिति, वेदानुशासनमिति, वेदानुशासनमिति ॥ ५ ॥

इत्यथर्ववेदे आरुणेयोपनिषत् समाप्ता ॥ ११ ॥

---

वेदार्थः सन्न्यासं सत्यधिकारे कर्त्तव्यत्वेन 'वेद' जानाति, सः 'सूरः' साधकश्रेष्ठः।

उक्तसन्न्यासफलावेदकमन्त्रद्वयमुदाहरति, तद्विष्णोरित्यादि। सूरयो दिव्यदृष्ट्या 'तत्' सुखोपलभ्यं विष्णोः परमं पदं सदा पश्यन्ति। तस्य नित्यत्वात् स्वरूपे दृष्टान्तमाह दिवीति। निर्मले आकाशे 'आततं' व्याप्तं चक्षुर्यथा आवरकाभावादविततं निर्विकल्पकं ज्ञानं भवति, तथा विकल्पशून्यं चिद्घनं तदित्यर्थः।

ननु कथं तदेवं लभ्यमित्याशङ्क्य गुरूपदेशादित्याह, तद्विप्रास इति। छान्दसोऽसुक्, ब्राह्मणानामेवोपदेशाधिकार इति विप्रपदेन सूचितम्; 'विपन्यवः' विमन्यवः छान्दसो वर्णव्यत्ययः, काम-क्रोधादिरहिताः, यतस्ततो पन्युः स्तुतिः तद्रहिताः, तुल्यनिन्दास्तुतय इति वा, 'जागृवांसः' त्यक्ताज्ञाननिद्राः, तदुक्तम्,

"या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी" इति।

'समिन्धते' सम्यक् दीपयन्ति परहिताय प्रकाशयन्ति; किं तत्? यद्विष्णोः परमं 'पदं' पदनीयं सुखोपलभ्यं स्थानं स्वरूपात्मकमेव, विप्रोपदेशादेव तल्लभ्यमितिभावः। इति शब्दो मन्त्रद्वयसमाप्त्यर्थः।

## ब्रह्मविद्योपनिषत्।

ओं ब्रह्मविद्यां प्रवक्ष्यामि सर्वज्ञानमनुत्तमाम्।
यत्रोत्पत्तिं लयश्चैव ब्रह्म-विष्णु महेश्वरात्॥ १॥

---

उपसंहरति, एष निर्वाणेति मतिर्भावि च, निर्वाणोऽवाप्ते इति शिक्षामत्र, 'निर्वाणम्' उपशान्तिर्मोक्ष इति यावत्, तस्यानुशासनमिदं द्रष्टव्यम्। ननु किमिदं प्रजापतेरनुशासनम्? ओमिति चेत्, तथा सति पौरुषेयत्वेनाप्रामाण्यं प्रसज्येत स्यादित्याशङ्क्याह वेदानुशासनमिति। आदर्षिप्राजापत्या ख्यायिका तु विद्या स्तुत्यर्थैव 'वेदस्य' शब्दराशेः सर्वस्य सर्ववर्णाश्रमादिव्यवस्थाहेतोः राजकल्पस्यानुशासनं, तदकरणे संसारशूले तस्करादेरिव विनिक्षेपः स्यात्। यथाऽसोऽन्येषामपि वेदानामेतावदर्थं पर्यवसायित्वमित्येतदर्थं। इति शब्द उपनिषत्समाप्त्यर्थः।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद वाक्यानामारुणेय प्रदीपिका॥
इत्यारुणेयोपनिषदो दीपिका सम्पूर्णा॥ ११॥

---

ओं ब्रह्मविद्योपनिषदि त्रिखण्डायां त्रिदेवता।
त्रिस्थुत्पत्ति लया प्रोक्ता प्रणवस्याक्षरत्रयात्॥ १॥

ब्रह्म प्रणवस्त्रिमात्राभेदेनोपास्यत्वयोपदिष्टम्, तस्यावयवश्च शरीरं वर्णं स्थान-लया प्रोक्ता इति तदर्थं ब्रह्मविद्योपनिषदा रभ्यते। ब्रह्मविद्यां प्रवक्ष्यामीति श्लोक आदिदेवादौ पठ्यते। 'ब्रह्म' प्रणव तस्य 'विद्यां' ज्ञान, तां किम्भूतां? सर्वेषां 'ज्ञानम्' उपायभूताम्, तथा 'यत्र विद्यायां देवत्रयात् उत्पत्तिं

प्रसादान्तःसमुत्थस्य विष्णोरद्भुतकर्मणः ।
रहस्यं ब्रह्मविद्यायां ध्रुवाग्निः सम्प्रचक्षते ॥ २ ॥
ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ।
शरीरं तस्य वक्ष्यामि स्थानं कालं लयं तथा ॥३॥

---

लयं चकारात् पालनञ्च प्रवक्ष्यामीति पूर्वेणान्वयः । स्तुतौ प्रतिज्ञेयम् ॥ १ ॥

प्रसादेति । विष्णोर्ब्रह्मविद्यायां रहस्यं 'ध्रुवाग्निः' प्रणवबीजं इति सम्प्रचक्षते बुधा इत्यन्वयः । विष्णुरेव विद्या प्रवर्त्तिते त्यर्थः । कीदृशस्य ? 'प्रसादेन' भक्तकृपया 'अन्तः' अन्तरात् स्तम्भमध्यात् 'समुत्थस्य' नृसिंहरूपेण प्रकटीभूतस्य, यद्वा "प्रसादो देवभूभुजाम्" इति कोषात् क्षीरोदार्णव वैकुण्ठ बदरिकाद्वारकादि प्रसादस्थानान्तरात् जगद्रक्षणार्थं प्रकटीभूतस्य, यद्वा 'प्रसाद' निद्राद्यपेक्षया प्रसन्नरूपो जीवः, तस्य आन्तरम् आवरणमविद्यादि, ततः 'समुत्थस्य' निष्क्रान्तस्य अविद्यावरणरहितस्येत्यर्थः ; यथोक्तं छान्दोग्ये 'स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुषः' इति । अद्भुतकर्मणः मत्स्यादि-रूपेण, ओङ्कारः 'ध्रुव' अक्षरमिति वर्णैरुक्तः , तथाहि,

"ओङ्कारो वर्तुलस्तारो बिन्दुः शक्तिस्त्रिदैवतः ।
प्रणवो मन्त्रगर्भश्च पञ्चदेवो ध्रुवः शिवः ।
मन्त्राद्यः परमं बीजं सूक्ष्ममाद्यश्च तारकः ।
शिवादिर्व्यापको व्यक्तं परं ज्योतिश्च सविदः" । इति ।

स्थानं कालं लयं तथेति । कालशब्दो मेघवाचको मुहू

तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नय.।
तिस्रो मात्रार्द्धमात्रा च त्र्यक्षरस्य शिवस्य च॥ ४ ॥
ऋग्वेदो गार्हपत्यञ्च पृथिवी ब्रह्म एव च।
अकारस्य शरीरन्तु व्याख्यातं ब्रह्मवादिभिः॥ ५ ॥
यजुर्वेदोऽन्तरिक्षञ्च दक्षिणाग्निस्तथैव च।
विष्णुश्च भगवान् देव उकारः परिकीर्त्तितः॥ ६ ॥
सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च।
ईश्वरः परमो देवो मकारः परिकीर्त्तितः॥ ७ ॥
सूर्य्यमण्डलमिवाभात्यकारः शङ्खमध्यगः।

---

त्मकयति, तेन सर्वं पश्यामीत्यर्थः। वर्णमित्येव वक्तव्ये काल पदञ्च मायारूप कालस्यापि सङ्ग्रहार्थमिति द्रष्टव्यम्॥२॥३॥

अवयवश शरीर तावदाह, तत्र देवा इति। त्र्यक्षरस्य शिवस्य चेति, 'शिव' अर्द्धमात्रार्थं तिस्रो मात्रास्त्र्यक्षरस्य अर्द्धमात्रा शिवस्येत्यर्थं, प्रणवस्य देवादयस्त्रय उक्ता। तिस्रो मात्रा अर्द्धमात्रा चेति वक्तव्ये छान्दस सन्धि। तदुक्त शट प्रदीपिकायाम्।

"अकारश्च उकारश्च मकारो विन्दु सञ्ज्ञक।
त्रिधा मात्रा स्थिता यत्र तत्पर ज्योतिरोमिति"॥ ४॥

त्रय इत्युक्त, तदेव विभजते, ऋग्वेद इत्यादिना। ब्रह्म एव चेत्यत्र छान्दसी ह्रस्व प्रकृतिभावश्च, ब्रह्मा देव इत्यर्थं। ॥ ५—७॥

अध्यात्मेन अन्येन शरीरमुक्त, सम्प्रति स्थान वर्णसहित

उकारश्चन्द्र-सङ्काशस्तस्य मध्ये व्यवस्थितः ॥८॥
मकारश्चाग्नि-सङ्काशो विधूमो विद्युतोपमः।
तिस्रो मात्रास्तथा ज्ञेयाः सोम-सूर्य्याग्नि-तेजसः ॥९॥
शिखाभा दीपसङ्काशा यस्मिन्नुपरि वर्त्तते।
अर्द्धमात्रा तु सा ज्ञेया प्रणवस्योपरि स्थिता ॥ १० ॥
पद्मसूत्रनिभा सूक्ष्मा शिखाभा दृश्यते परा।

---

माह, सूर्य्येति। सूर्य्यमण्डलमिव आभाति अकारः, 'शङ्ख' ललाटास्थि 'तन्मध्ये' नेत्रस्थानं तत्र वर्त्तमानः, योऽयं दक्षिणेऽक्षन्पुरुष इति श्रुतेः।

"शङ्खौ निध्यन्तरे कम्बु-ललाटास्थि-नखेषु च" इति विश्वः। 'तस्य मध्ये' शङ्खस्यैव मध्ये अर्थात् वामनेत्रे स्थितः। उकार इति। अथापि तस्य मध्ये इत्यपेक्षते, शङ्खस्य मध्ये अर्थात् तृतीयनेत्रे व्यवस्थितः; अतएव याज्ञवल्क्येनोक्तम्।

"इडायां पिङ्गलायाञ्च चरतश्चन्द्र-भास्करौ।
इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः"॥ इति।
पैचर्थ्याञ्च।

"जिह्वामूले स्थितो देवि! सर्वतेजोमयोऽनलः।
तदग्रे भास्करश्चन्द्रस्तालुमध्ये प्रतिष्ठितः।
एवं यो वेत्ति तत्त्वेन तस्य सिद्धिः प्रजायते"॥ इति।

'तिस्रो मात्राः' अकारादयः, अनेन आसां उक्ताः, सोम सूर्य्याग्नि-तेजस इत्यनेन वर्णा उक्ताः, 'यस्मिन्' शङ्खे 'उपरि' तृतीयनेत्रादुपरि, अनेनार्द्धमात्रास्थानमुक्तम्॥ ८—१०॥

पद्मसूत्रेति। पद्मसूत्रनिभेति तथा वर्ण उक्तः, 'शिखाभा'

**सा नाडी सूर्य्यसङ्काशा सूर्य्यं भित्त्वा तथा परम्॥११॥**
**द्वासप्तति सहस्राणि सूर्य्यं भित्त्वा तु मूर्द्धनि।**
**वरद. सर्वभूतानां सर्वं व्याप्यैव तिष्ठति ॥ १२ ॥**

---

ज्वालाभा ऊर्द्ध्वं सा पैपलाभ्यां, तथा मूले स्थूला उपर्य्युपरि तन्वी च।

"शिखा शिफायां ज्वालायां चूडायामग्रमात्रके।
लाङ्गल्याञ्चापि शाखायां चूडायाञ्च शिखण्डिन"॥

इति विश्व।

'सा नाडी सुषुम्णा, तस्या एव वा पूर्वोक्त विशेषणानि, 'सूर्य्यं' चक्षुरधिष्ठानम्, अथवा, सूर्य्यात् लब्धरश्मित्वात्मनो ऽधिष्ठानचन्द्र सूर्य्यं, त भित्त्वा, तथापरम् अधस्तात् द्वाम सति सहस्राणि नाडीभिस्सा ऊर्द्ध्वं गता, तदुक्तं गौरवेण,

"ऊर्द्ध्वं मेढ्रादधो नाभे कन्दयोनि खगाण्डवत्।
तत्र नाड्यः समुत्पन्ना सहस्राणि द्विसप्तति" ॥ इति।

पुनरधिदैवत सूर्य्यं भित्त्वा 'मूर्द्धनि' ब्रह्मलोके द्वादशान्ते च दृश्यते इत्यनुपद । तदुक्तं याज्ञवल्क्येन

"तासां मुख्यतमास्तिस्रस्तिसृष्वेकोत्तमोत्तमा।
मुक्तिमार्गेति सा प्रोक्ता सुषुम्णा विश्वधारिणी॥
कन्दस्य मध्यमा गार्गि। सुषुम्णा सुप्रतिष्ठिता।
पृष्ठमध्य स्थिता नाडी सा हि मूर्ध्नि व्यवस्थिता॥
मुक्तिमार्गे सुषुम्णा सा ब्रह्मरन्ध्र प्रतिष्ठिता।
अव्यक्ता सैव विज्ञेया शुक्ला सा वैष्णवी स्मृता" ॥ इति।

प्रणवो नादरूपेण सर्वव्याप्येवेत्याह वरद इत्यनेन। बोद्धारोऽनाहतशब्दो विश्वरूपेण दृष्टो भवति ॥ ११—१२ ॥

कांस्यघण्टा-निनादस्तु यथा लीयति शान्तये ।
ओङ्कारस्तु तथा योज्यः शान्तये सर्वमिच्छता ॥१३॥
यस्मिन् संलीयते शब्दस्तत्परं ब्रह्म गीयते ।
ध्रुवं हि चिन्तयेद् ब्रह्म सोऽमृतत्वाय कल्पते ॥
सोऽमृतत्वाय कल्पते ॥ १४ ॥

इति ब्रह्मविद्योपनिषत् समाप्ता ॥ १२ ॥

---

इदानीं लयमाह, कांस्यघण्टेति। यथा 'लीयति' लीनो भवति उपरतव्यापारो भवति, ओङ्कारस्तथा शान्तये योज्यः प्रयुक्ततरो जप्य इत्यर्थः। 'सर्वं' सर्वात्मभावं ब्रह्मभावमिच्छता ॥ १३ ॥

यस्मिन् 'संलीयते' यद्वस्तु अनुभूय 'शब्दः' विषयः नोपलभ्यते विलीयते, तत्परं ब्रह्म। तदुक्तं हठप्रदीपिकायाम्,

"काष्ठे प्रवर्त्तितो वह्निः काष्ठेन सह शाम्यति।
नादे प्रवर्त्तितं चित्तं नादेन सह लीयते॥
विस्मृत्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः।
एकीभूयाथ सहसा चिदाकाशे विलीयते"॥ इति।

लयलक्षणञ्च।

"लयो लय इति प्राहुः, कीदृशं लयलक्षणम्?।
अपुनर्वासनोत्थानात् लयो विषयविस्मृतिः"॥ इति।

यद्वा यतो वाचो निवर्त्तन्ते इत्यर्थः ॥ १४ ॥

उपसंहरति, ध्रुवमिति। 'ध्रुवम्' ओङ्कारं हि यद्ब्रह्म चिन्तयेत् 'ध्रुवम्' एकरूपं वा एकाग्रतया वा ब्रह्म चिन्तयेत्। हिरपि: समाप्त्यर्थः।

## क्षुरिकोपनिषत् ।

ओं क्षुरिकां सम्प्रवक्ष्यामि धारणां योग-सिद्धये ।
यां प्राप्य न पुनर्जन्म योगयुक्तः स जायते ॥ १ ॥
वेद-तत्त्वार्थ-विहितं यथोक्तं हि स्वयम्भुवा ।

---

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद व्याख्याना दीपिका ब्रह्मवेदने ॥
इति ब्रह्मविद्योपनिषदो दीपिका सम्पूर्णा ॥ १२ ॥

---

* ओं क्षुरिका शस्त्रिका प्रोक्ता तत्तुल्या धारणा यत ।
तद्वाचकत्वशब्दोऽत्र क्षुरिकाग्रन्य उच्यते ॥ १ ॥

गुरुत प्राप्तविद्यस्य अत एव लब्धज्ञान प्रणव मन्त्रस्य षडङ्गे योगेऽधिकार इति तदर्थमुत्तरो ग्रन्थ, क्षुरिकामि त्यादि । 'क्षुरिकामिव' समारोच्छित्तये शस्त्रिकामिव रूपक, 'धारणाम्' आत्मनि चित्तावस्थानलक्षणाम्, उक्तञ्च योगि याज्ञवल्क्येन,

"शमादि गुणयुक्तस्य मनस स्थितिरात्मनि ।
धारणेत्युच्यते सद्भि शास्त्रतात्पर्य वेदिभि " ॥ इति ।

न पुनर्जन्म भवतीति शेष । 'स' धारणावान् कुत श्चिदपराधाद् यदि योगभ्रष्टो भवति, तर्हि जन्मान्तर योग युक्त एव जायते इत्यर्थ योगश्चित्तवृत्ति निरोध ।

"तत्र त बुद्धिसंयोग लभते पौर्वदेहिकम्" इति स्मृते ॥१॥

वेदेति । इदं योगस्वरूपं वेदेन 'तत्त्वार्थेन' परमार्थेन 'विहित' विधि विषयीकृत 'स्वयम्भुवा' ब्रह्मणा 'यथोक्त'

**निःशब्दं देशमास्थाय तत्रासनमवस्थितः ॥ २ ॥**
**कूर्मोऽङ्गानीव संहृत्य मनो हृदि निरुध्य च ।**

---

यथा वर्त्तते तथोक्तं न विसंवादोत्यर्थः । तथोक्तं योगियाज्ञवल्क्येन,

"वक्ष्यामि योगसर्वस्वं ब्रह्मणा कीर्त्तितं पुरा" । इति ।

"तथोक्तं परमेष्ठिना" ० ० ० इति च ।

योगस्वरूपं साधयितुं षडङ्गान्याह, निःशब्दमिति । यदुक्तं,

"कान्तारे विजने देशे फलमूलोदकान्विते ।

तपश्चरन् प्रसेवित्वम् ० ० ० इति ।

षडङ्गलक्षणान्यत्र न विस्तरादुक्तानि । यमादीनां पूर्वकाण्डे एव निरुक्तत्वादिहानभिधानं, न तु कापालिकवदनङ्गीकारात् ।

यमा यथा

"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।

क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश" ॥

नियमा दश यथा,—

"तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ।

सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम्" ॥ इति ।

'अवस्थितः' आवश्यिक आरूढः, तदुक्तं गीतासु ।

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।

नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्" ॥ इति ।

तथा तत्रैवासनं पद्माद्यवस्थितम् इत्यपि बोध्यम् । तदुक्तं हठप्रदीपिकायाम् ।

"हठस्य प्रथमाङ्गत्वादासनं पूर्वमुच्यते ।

तत्कुर्य्यादासनस्थैर्य्यमारोग्यञ्चाङ्गपाटवम्" ॥ इति ॥२॥

मात्रा-द्वादश योगेन प्रणवेन शनैः शनैः ॥३॥
पूरयेत् सर्वमात्मानं सर्वद्वारान् निरुध्य च।
उरो-मुख-कटि-ग्रीवं किञ्चिद्धृदयमुन्नतम् ॥ ४ ॥

---

कूर्माङ्गानीवेति प्रत्याहार उक्तः, यत्र इन्द्रियाणीति शेषः। तदुक्तम्,

"इन्द्रियाणां विचरतां विषयेषु स्वभावतः।
बलादाहरणं तेषां प्रत्याहारः स उच्यते" ॥ इति।

प्रत्याहारं निरुध्य मन इति। 'हृदि' हृत्पुण्डरीके। मात्रा इति। द्वादश मात्रा नादबिन्द्वात्मिका 'घोषिणी प्रथमा मात्रा' इत्यादिना, तत्रैव द्रष्टव्या। प्रणवेन शनैश्शनैरिति वायुं पूरयेत्; कीदृशेन? 'मात्रा' अकारोकारमकारार्द्धमात्रात्मकत्वात्, तासां प्रत्येकं तिस्रस्तिस्रो मात्रा घोषिण्याद्या भूमिपर्यादिक्रमा द्वादश, तासां 'योगः' चिन्तनं यस्मिन् तेन, यदा द्वादशभिः प्रणवैः पूरणं, तदा अष्टचत्वारिंशद्भिः कुम्भनं, चतुर्विंशतिभिश्च रेचनम्, यदा तु षोडशभिः पूरणं, तदा चतुःषष्टिभिः कुम्भनं, द्वात्रिंशद्भिः रेचनम्, अष्टभिर्यदा पूरणं, तदा द्वात्रिंशद्भिः कुम्भनं, षोडशभिः रेचनमिति विवेकः। सर्वमात्मानं न तु कतिपयाङ्गानि, तथैवोपविशेत्, अन्यथा सति वायुवैषम्यं स्यात्। 'सर्वद्वारान्' सर्वद्वाराणीत्यर्थः। उरो मुख कटि ग्रीवमुन्नतं धारयेदिति शेषः।

तदुक्तं गीतासु —

"समं कायशिरोग्रीवं धारयन्नचलं स्थिरम्" ॥ इति।

हृदयं किञ्चिदुन्नतं धारयेत्, अनेन जालन्धरबन्धः सूचितः, स यथा,—

प्राणान् सञ्चारयेद्योगी नासाभ्यन्तरचारिणः ।
भूत्वा तत्र गतः प्राणः शनैरथ समुत्सृजेत् ॥ ५ ॥
स्थिरमात्रा दृढं कृत्वा अङ्गुष्ठे तु समाहितः ।
द्वे तु गुल्फे तु कुर्वीत जङ्घे चैव त्रयस्त्रयः ॥६॥
द्वे जानुनि तथोरुभ्यां गुदे शिश्ने त्रयस्त्रयः ।
वायोरायतनञ्चात्र नाभिदेशे समाश्रयेत् ॥ ७ ॥

---

"कण्ठमाकुञ्च्य हृदये स्थापयेच्चिबुकं दृढम् ।
बन्धो जालन्धराख्योऽयममृताप्ययकारकः." ॥ इति ॥३-४॥

सञ्चारयेत् पूरकमात्राभिः, तस्मिन् हृदये। नासेति। तेन सुखेन पूरक रेचकौ निर्दिष्टौ।

भूत्वेति। प्राणः 'तत्र' सर्वशरीरे 'गतः' प्रविष्टः भूत्वा तिष्ठतीति शेषः। एतेन कुम्भक उक्तः, स च पूरक मात्रापेक्षया चतुर्गुणाभिर्मात्राभिः कार्यः। अथ रेचकमाह, शनैरिति। समुत्सर्जनञ्च पूरकापेक्षया द्विगुणाभिर्मात्राभिः ॥५॥

स्थिरेति, 'स्थिराभिः' एकरूपाभिर्मात्राभिः 'दृढं' स्थिरं प्राणं कृत्वा, केवलकुम्भकः सिद्ध इत्यर्थः। ततो धारणाभिः प्रत्याहारमभ्यसेदित्याह, अङ्गुष्ठ इत्यादिना। अङ्गुष्ठे इत्यादौ जातावेकवचनम्, अङ्गुष्ठयोः गुल्फयोः जङ्घयोः इत्यादि बोद्धव्यम्। अङ्गुष्ठयोर्धारणे कुर्वीतेत्यन्वयः, द्वे तु धारणे कुर्यादित्यर्थः। त्रयस्त्रय इति। धारणा मध्येषु निरोधाः कर्त्तव्याः इति शेषः। जानुनि जानुनोः ऊरुभ्यां साधनाभ्याम् ऊर्वोरपि तथा द्वे इत्यर्थः। नाभिदेशे इति। अत्र नाभिदेशे वायोः 'आयतनं' मुख्य स्थानमस्ति। तत्र धारणया समाश्रयेदित्यर्थः ॥ ६—७ ॥

तत्र नाड़ी सुषुम्णा तु नाड़ीभिर्बहुभिर्वृता ।

---

तत्रेति । 'तत्र' नाभौ 'सुषुम्णा' मध्यनाडी 'बहुभिः' द्वासप्ततिसहस्रैः वृता ; मूलन्तु तस्या कन्दमध्ये । कन्दस्तु—

"गुद ध्वजान्तरे कन्दमुत्सेधाद् द्व्यङ्गुलं विदुः" । इति ।

"गुद मेढ्रान्तरे यद्वै वेणुकन्दं तदुच्यते" । इति च ।

'वेणुः' सुषुम्णा, सा च षट्चक्रगतो मूलाधारदण्डान्तशिखरं गता मूर्द्धानं भित्त्वा ब्रह्मलोकान्तं निर्गता । तदुक्तं छान्दोग्ये, "शतञ्चैका च हृदयस्य नाड्यः, तासां मूर्धानमभिनिःसृतैका" इति । नाभेरूर्द्ध्वन्तु चक्रानुक्रमेण धारणा मूर्द्धान्त दर्शिता उक्तञ्च योगियाज्ञवल्क्येन,

"मर्मस्थानानि विज्ञाय शरीरे योगधर्मयोः ।
तानि सर्वाणि वक्ष्यामि यथावच्छृणु सुव्रते ।।
पादाङ्गुष्ठौ च गुल्फौ च जङ्घामध्यौ तथैव च ।
चित्यामूलञ्च जान्वोश्च मध्ये चोरुद्वयस्य च ।।
पायुमूलं ततः पश्चान्मध्यदेहस्य मेढ्रकम् ।
नाभिश्च हृदयं गार्गि ! कण्ठकूपस्तथैव च ।।
तालुमूलञ्च नासाया मूलञ्चाक्ष्णोश्च मण्डले ।
भ्रुवोर्मध्यं ललाटञ्च मोक्षाणि मुनिसत्तमे ।।
मर्मस्थानानि चैतानि" इति ।

एतेषु च तत्रैव धारणोक्ता,—

"स्थानेष्वेतेषु मनसा वायुमारोप्य धारयेत् ।
स्थानात् स्थानं समाकृष्य प्रत्याहारं प्रकुर्वतः ।
सर्वे रोगाश्च नश्यन्ति योगाः सिध्यन्ति तस्य च" । इति ।

षड्चक्रादूर्द्ध्वमारोहे फलमिदमुक्तम् ; मूर्द्ध्नोऽङ्गुष्ठपर्यन्तावरोहेऽपि धारणानां फलमुक्तम्,—

अणुरक्ताश्च पीताश्च कृष्णास्ताम्र-विलोहिताः ॥८॥
अतिसूक्ष्माञ्च तन्वीञ्च शुक्लां नाड़ीं समाश्रयेत् ।

---

"स्थानात् स्थानं समाकृष्य यस्त्वेवं धारयेत् सुधीः ।
सर्वपाप विशुद्धात्मा जीवेदाचन्द्र तारकम्" ॥ इति ।

अणुरक्तायेति । अणुरक्ताश्चेत्यादि नाडीनां विशेषणम्, तदुक्तं छान्दोग्ये, "अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य" इति । अणवश्च ता रक्ताश्चेति समासः ॥८॥

एवं केवल कुम्भके सिद्धे प्राणमनसो स्थानविशेषेषु भ्रत्वा द्वारमध्यस्य धारणा सिद्धये सुषुम्णायां प्राणमनसो प्रवेश कर्त्तव्य, तत्रोपाय, मूलोड्डियाण जालन्धर बन्धैः शक्ति चालनेनापानमूर्द्ध्वमाकुञ्च्य तेन देहमध्येऽग्निं प्रज्वाल्य तज्ज्वालया कुण्डलीं प्रताप्योद्बोध्य ब्रह्मनाडीद्वार मध्यस्य तन्मुख प्रसारणेन तत्र वायु मनो वह्नीन् प्रवेशयेदित्याशये-नोक्तं, अतिसूक्ष्मामिति । तत्र जालन्धर बन्ध उक्त ; उड्डियाणो यथा,—

"उदरे पश्चिमं तानं नाभेरूर्द्ध्वन्तु कारयेत् ।
उड्डियाणो ह्ययं बन्धो मृत्यु मातङ्ग केशरी" ॥ इति ।

मूलबन्धो यथा,—

"पार्ष्णिभागेन सम्पीड्य योनिमाकुञ्चयेद् गुदम् ।
अपानमूर्द्ध्वमाकृष्य मूलबन्धो निगद्यते" ॥ इति ।

शक्ति चालन यथा,—

"अभ्यासनस्थस्य फणावती सा प्रातश्च साय प्रहरार्द्धमात्रम् ।
प्रपूर्य्य सूर्य्यात् परिधानयुक्त्या प्रगृह्य नित्य परिचालनीया" ॥
इति ।

**पादस्योपरि सम्मृज्य तद्रूपं नाम कृन्तयेत् ।**
**मनोद्वारेण तीक्ष्णेन योगमाश्रित्य नित्यशः ॥१२॥**

---

'पूरयन् दिवि' इति पाठे, दिवि इति निमित्तसप्तमी, फलमपि च निमित्तं भवति, दिवं प्राप्त्यर्थम् ऊर्ध्वमारोहेदित्यर्थः । मन प्रकृतिक स्तुर शाणस्थानीयत्वात् मन एवेत्यर्थ 'सुतीक्ष्ण' तर्कंण घर्षणोपलेन निर्दिष्ट शाणस्थानीयया बुद्ध्या निर्मलम् ॥ ११ ॥

पादस्येति । ब्रह्मण 'पादस्य' व्यवन्तरोक्तस्य सुम्पाद स्थानीयस्य उपरि तदुपासनाय 'सम्मृज्य' निर्मलीकृत्य, मजे र्यङन्तात् ल्यप् छान्दस । ब्रह्मण पादा यथा,—

"तदेतच्चतुष्पाद् ब्रह्म, वाक् पाद, प्राण पाद, चक्षु पाद, श्रोत्र पाद, इत्यध्यात्मम्, अथाधिदैवतम्, अग्नि पाद, वायु पाद, आदित्य पाद, दिश पाद, इत्युभयमेव आदिष्ट भवति, अध्यात्मञ्चैवाधिदैवतञ्चेति" ।

अथवा प्रणवस्य चत्वार्यक्षराण्येव आपदादि रूपाणि पादा, "ओमित्येतदक्षरस्य पादाश्चत्वार" इत्यथर्वशिखोक्ते, 'तत्' प्रसिद्ध 'रूप' भूतादिस्वरूप 'नाम' तद्वाचक शब्द, तदुभय ब्रह्मणो सोमस्थानीय स्वरूपाद् बाह्य 'कृन्तयेत्' नियर्त्त येत तद्विषयां वृत्ति भूतशुद्धि मार्गेण त्यजेदित्यर्थं । इदमेव तस्य निकृन्तनं यदविषयीकरण मनोमयत्वात् संसारस्य मन मात्रपरक्षस्य स्वरूपाभावात्, हठपथे उत्तरमार्ग रोधक सद्र न्थिनाडीचक्र छिन्द्यात्, तदुक्त,—

"नासादक्षिण मार्गवाहि पवन प्राणातिदीर्घीकृत
[illegible]
छिन्द्यात् काल विशालवह्नि वशतो सूर्यस्थ नाडीगणा
स्तत् कार्यं कुरुते पुनर्नवतर छिन्नद्रुमस्कन्धवत्" ॥ इति ।

इन्द्रवज्र इव प्रोक्तो मर्म्म जङ्घानुकीर्त्तनम् ।
तद्ध्यान बलयोगेन धारणाभिर्निकृन्तयेत् ॥१३॥
ऊर्वोर्मध्ये तु संस्थाप्य मर्म्म प्राण विमोचनम् ।

---

किं कृत्वा निकृन्तयेत् ? यत आह, मम इति । मनसा उपायेन 'निखिल' मनीष्य योग' जीवात्म परमात्मनोरैक्य, पाठान्तरे 'योगम् उद्योगम् आस्थित्य ॥ १२ ॥

कीदृश योगम् ? इन्द्रवज्र इवेति । तथा प्रोक्त यथा इन्द्रो वज्रेण मेघ भिनत्ति एवमयं योग छेद्य वासना जालम्, 'इन्द्रवज्र' विद्युत् तत्तुल्यया कुण्डलिन्या नाडी जालच्च छिनत्ति । पुन कीदृश ? मर्म्मणी जङ्घाया अनु कीर्त्तन यस्मिन् स त, जङ्घारूप मर्म्मध्यानस्थान यत्र कथि तम् । जङ्घाग्रहणमङ्गुष्ठादेरप्युपलक्षण तुल्यन्यायत्वात्, अङ्गु ष्ठादि मूर्द्धान्ताना मर्म्मणामनुकीर्त्तनात् । 'मर्म्मजङ्घानुकृन्तनम्' इति पाठे, यथा नापितेन क्षुरस्य तैक्ष्ण्याधानाय जङ्घा अनु कृत्यते क्षुण्ण्यते तथा अङ्गुष्ठादिमर्म्मस्थानानि नाडीमनानु कृन्तनेन निर्म्मलीक्रियन्ते इत्यर्थः । तदिति तच्छब्देन योग्यता वशात् मर्म्मजङ्घादि गुणीभूतमपि परामृश्यते तत् सनाडीक मर्म्मादि धारणाभिश्छिन्द्यात् । अथवा व्यवहित मपि रूप नाम तच्छब्देन परामृश्यते, स एवार्थ ॥ १३ ॥

ऊर्वोरिति । ऊरुद्वयमुत्तरोत्तर स्थानोपलक्षणम्, ऊरो र्मध्ये समनस्क प्राणं संस्थाप्य मर्म्मणि प्राणस्य च विमोचन कर्त्तव्यम् । 'अस्मिन् मर्म्मण्यह स्थित' इत्यभिमान त्यक्त्वा निरालम्ब स्थितो भवेदित्यर्थः । एव स्थानान्तरेष्वप्यूह्यम् । अथवा

ततो विदित-चित्तस्तु निःशब्दं देशमास्थितः ।
निःसङ्गस्तत्त्वयोगज्ञो निरपेक्षः शनैः शनैः ॥२१॥
पाशं छित्त्वा यथा हंसो निर्विशङ्कः खमुत्क्रमेत् ।
छिन्नपाशस्तथा जीवः संसारं तरते सदा ॥२२॥
यथा निर्वाण-काले तु दीपो दग्ध्वा लयं व्रजेत् ।
तथा सर्वाणि कर्माणि योगी दग्ध्वा लयं व्रजेत् २३

---

इति विपरिणाम । पुस्तादि ग्राहाश्रयो यथा भण्डुक भवति, तथैव नाडो वासनाश्रय इत्यर्थ । तर्हि किं कार्य्यम् ? अत आह, तामिति । छित्त्वानफलमाह, तदिति । 'प्रपद्यन्ते' सम्पद्यन्ते ॥ १८—२० ॥

तत इति । विदित चित्त येन स विदितचित्त । 'मात्रा-धारेण' मात्रा द्वादशादि सङ्ख्या प्रणवमात्रा, सा एव धारा यस्य मन क्षुरस्य स तथा । 'तन्तु' वासनारूपम् । छिन्द्धि निश्चयार्थं , ममास्यर्थं इतिशब्द । पथमारोह प्रकार उत्-क्रान्तिगमये छिसरीपटमे उक्त , यथा,—

"यदा तु योगिनो बुद्धिस्यात् देहमिम भवेत् ।
तदा स्थिरासनो भूत्वा मूलाच्छक्ति समुत्थिताम् ॥
सूर्य्यकोटि प्रतीकाशा भावयेच्चिरमात्मन ।
आपादतल पर्यंन्ता प्रसृत जीवमात्मन ॥
समुत्थ्य क्रमयोगेन मूलाधारपदं नयेत् ।
तत्र कुण्डलिनीं शक्तिं भवदीपन पदिभताम् ॥
जीव निजर्षेन्द्रियाणि सकलों चिन्तयेद्धिया ।
सम्भाव्य कुम्भकाभ्यां तडिद्दस्तम भास्वराम् ॥

प्राणायाम-सुतीक्ष्णेन मात्राधारेण योगवित् ।
वैराग्योपल घृष्टेन छित्त्वा तन्तुं न बध्यते ॥२४॥
अमृतत्वं समाप्नोति यदा कामात् स मुच्यते ।
सर्व्वैषणा विनिर्मुक्तश्छित्त्वा तन्तुं न बध्यते ॥
छित्त्वा तन्तुं न बध्यते ॥ २५ ॥

इति क्षुरिकोपनिषत् समाप्ता ॥ १२ ॥

---

मूलाधाराद् यतिर्देवि । स्वाधिष्ठानपदं नयेत् ।
तत्रस्थ जीवमखिलं प्रसन्नौ चिन्तयेद् व्रती ॥
तडित् कोटि प्रतीकाशां तस्मादुत्थाय सत्वरम् ।
मणिपूरपदं प्राप्य तत्र पूर्ववदाचरत् ॥
तत्र स्थित्वा क्षणं देवि । पूर्ववद् योगमार्गवित् ।
अनाहतं नयेद् योगी तत्र पूर्ववदाचरेत् ॥
उत्थाय तस्माद् भ्रूमध्ये गोस्तनं प्रविशेत् पुनः ।
पश्च घोर महाशक्त्या कोटिसूर्य्य समप्रभा ॥
मनसा सह वागीशा भित्त्वा ब्रह्मार्गलं क्षणात् ।
परामृत महाम्भोधौ विश्रान्तिं तत्र कारयेत् ॥
तत्रस्थ परमे देव शिव परम कारणम् ।
शक्त्या सह समायाथ्य तयोरैक्यं विभावयेत्" ॥

इति प्राणमुत्क्रान्ति काल वञ्चयित्वा यदि जीवितुमिच्छेत् तदावरोह कुर्य्यादित्यपि तत्रोक्तम् । तद्यथा —

"यदि वञ्चितुमुद्युक्त काल कालविभागवित् ।
कान्तस्तु यावद् वसति तावत्तत्र सुखं वसेत् ॥
ब्रह्मद्वारार्गलस्थाषो देह कालप्रयोजनम् ।

चतुरभ्यास-योगेन छिन्देदनभिशङ्कितः ॥ १४ ॥
ततः कण्ठान्तरे योगी समूहन् नाड़ि-सञ्चयम् ।
एकोत्तरं नाड़िशतं तासां मध्ये वराः स्मृताः ॥१५॥
इड़ा रक्षतु वामेन पिङ्गला दक्षिणेन तु ।
तयोर्मध्ये वर स्थानं यस्त वेद स वेदवित् ॥१६॥

---

सर्वत्रावच्छेदेन व्यवधायक माघादि विदार्य स्थानात् स्थानान्तरे गमनञ्च ।

चतुरिति । करोरुस्तरेषु 'चतुर्षु' गुद मिश्र नाभि हृदय स्थानेषु अभ्यासयोगेन नाम रूप मर्म प्राणान् छिन्देत् । अथवा 'चतुर्भिर' चतुरावृत्त्या प्रातर्मध्याह्ने साय निशीथे च सर्वेषु स्थानेष्वभ्यास योगेन ।

नन्वेव छेदने देहाभिमान त्यागेन देहपात स्यादत आह, अनभिशङ्कित इति । अय भाव, न ह्यभिमान त्यागेन देहपातो भवति सुषुम्णादिषु तथा दर्शनात, ध्यानिना चिरकाल देहावस्थानश्रुतेय, न वा चक्रादि भेदेनापि सा शङ्केति ॥ १४ ॥

तत इति । तदनन्तर योगी 'कण्ठान्तरे' कण्ठमध्ये नाडी सञ्चय 'समूहन्' सञ्चयीकुर्वन् छिन्देदित्यनुषङ्गः । कियत्यो नाड्य सन्ति ? इत्यपेक्षायां मध्यमसङ्ख्यामाह, एकेति । 'वरा' उत्तमा ॥ १५ ॥

इडा वामेन पिङ्गला दक्षिणेन इत्येव वक्ष्यमाणे रक्षतुशब्द योग शिष्याणामाशिषि विद्यासम्प्रदायोच्छेदो माभूदिति । 'वर स्थान' सुषुम्णाख्य 'स' तदधिष्ठातार पुलिङ्गनिर्देशात् ॥ १६ ॥

सुषुम्णा तु परे लीना विरजा ब्रह्मरूपिणी।
द्वासप्तति-सहस्राणि प्रति नाड़ीषु तैतिलम् ॥१७॥
छिद्यते ध्यानयोगेन सुषुम्णैका न छिद्यते।
योग-निर्मलधारेण क्षुरेणानलवर्चसा ॥ १८ ॥
छिन्देन्नाड़ीशतं धीरः प्रभावादिह जन्मनि।
जातीपुष्प-समायोगैर्यथा वास्यन्ति तैतिलम् ॥१९॥
एवं शुभाशुभैर्भावैः सा नाड़ी तां विभावयेत्।
तद्भाविताः प्रपद्यन्ते पुनर्जन्म-विवर्जिताः ॥२०॥

ध्यायतेऽध्यासिता तेन तन्यते प्रेरिता पुनः ।
सूयते पुरुषार्थञ्च तेनैवाधिष्ठिता पुरा ॥ ४ ॥
गौरनादवती सा तु जनित्री भूतभाविनी ।
असिता सित-रक्ता च सर्वकामदुघा विभोः ॥५॥

---

माया 'ध्यायते' चिन्तयति जगत् सृष्ट्यर्थं सम्भावयति, नारी मिवर्त्तु, सा ता तदुक्तम्,—

"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ।" ॥ इति ।

तेन 'अध्यासिता' आक्रान्ता आरूढा प्रेरिता च सती 'तन्यते' स्वयमेव कार्यरूपेण ततो भवति, कर्मकर्त्तरि कर्म्मवत् प्रत्ययः । तेनैवाधिष्ठिता सती पुरा 'पुरुषार्थं' भोग्यं सूयते प्रसूतवती कर्म्मकर्त्तरि पुरि लुङ् चास्म इति भूते ऽनद्यतने लट् ॥ ४ ॥

भोग्यवस्तु जनकत्वेन माया ध्यात्वा रूपयति, गौरिति । इयं 'गौ' दोग्ध्री । दोग्ध्री चेत् इच्छारवं करोति न इत्याह, 'अनादवती' नादरहिता अचेतनत्वात्स्वातन्त्र्यासमर्था ईश्वराधीनेत्यर्थः । यद्वा 'गौरी' शुक्ला सत्त्वप्रधाना सती नादवती वेदप्रवर्त्तिका, पुंवद्भाव पूर्वस्य । "गौर शुक्लेऽरुणेऽपि च" इति विश्वः । 'असिता' तामसी, सिता चासौ रक्ता च 'सितरक्ता' सात्त्विकी राजसी चेत्यर्थः । 'विभो' ईश्वरस्य 'सर्वकामदुघा' सर्वान् कामान् दोग्धि यथेष्ट कार्यकरी । महानारायणीये श्वेताश्वतरे च अस्याश्छागीसाम्यमुक्तम्,—

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।

पिबन्ति नाम विषयसञ्ज्ञाताः कुमारकाः ।
एकस्तु पिबते देवं स्वच्छन्देन वशानुगः ॥ ६ ॥
ध्यान-क्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रथमं प्रभुः ।
सर्वसाधारणीं दोग्ध्रीमिज्यमानां सुयज्वभिः ॥ ७ ॥

---

अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" ॥ इति ॥ ५ ॥

जीवात्मनां बहुत्वं, भोक्तृत्वमीश्वरस्यैकत्वञ्चाह, पिबन्तीति । 'नाम' शब्दः 'विषय' श्चार्थः, तयोः समाहारः नाम विषयं 'पिबन्ति' भुञ्जते 'कुमारकाः' जीवाः, 'एकः' ईश्वरः 'पिबते' पाययतीत्यर्थः, तद्विधम् । "प्रयोजक व्यापारे कर्त्रभिप्राये क्रियाफले" इति सौयट । छान्दसत्वादकर्त्रभिप्रायेऽपि क्रियाफले आत्मनेपदम् । 'वशा' स्वविधेयाः 'अनुगा' परिवारा यस्य स वशानुगः ॥ ६ ॥

तर्हि किमस्य सर्वथा अभोक्तृत्वं ? नेत्याह, ध्यान क्रियाभ्यामिति । प्रथमं ध्यायति भगवानिदमिति, ततः पश्यति, सैव क्रिया, ताभ्यां च प्रथमं भुङ्क्ते तदुच्छिष्टमन्यो भुङ्क्ते, ध्यानावलोकनमेव तस्य भोजनं "न वै देवा अश्नन्ति, न पिबन्ति, एतदेवामृतं दृष्ट्वा तृप्यन्ति" इति श्रुतेः ।

भुङ्क्ते इत्युक्तम्, कां भुङ्क्ते ? तत्राह, सर्वेति । सर्वेषां 'साधारणीं' समभोग्याम् अव्याकृतरूपामित्यर्थः । "एकमस्य साधारणम्" इति श्रुतेः । दोग्ध्री तु स्वभावमपेक्षते, अन्यथा दोहाभावादत आह, इज्यमानामिति । 'सुयज्वभिः' साधुयाज्ञिकैः 'इज्यमानां' हव्यकव्येन पूज्यमानाम् ॥ ७ ॥

पश्यन्त्यस्यां महात्मानं सुपर्णं पिप्पलाशनम् ।
उदासीनं ध्रुवं हंसं स्नातकाध्वर्यवो हवेत् ॥ ८ ॥
शंसन्तमनुशंसन्ति बह्वृचाः शस्त्र कोविदाः ।
रथन्तरे बृहत् साम्नि सप्तवैते च गीयते ॥ ९ ॥
मन्त्रोपनिषद् ब्रह्म पदक्रम-समन्वितम् ।
पठन्ते भार्गवा ह्यस्यथर्वाणो भृगूत्तमाः ॥ १० ॥

---

पश्यन्तीति । उपस्थामीयमेक देहं त्यक्त्वा देहान्तरं गच्छतीति सुपर्णोपमम्, सुपर्णं 'पिप्पलं कर्मफलमश्नाति, तं पिप्पलाशनं, वस्तुतस्त्वा उदासीनं, स्नातकाध्वर्यव 'हवेत्' होमात् पश्यन्तीत्यन्वय । वहेदिति पाठे, तानिव 'वहेत्' निर्वहेत् योग क्षेमादिनेति व्याख्येयम् । हवे इति पाठे, हवन कर्मणि । हयेदिति पाठे, तानिव वर्द्धयेत् । हये इति पाठे, 'हय' शब्द तदुपलक्षिते यज्ञमेध कर्मणि ॥ ८ ॥

आध्वर्यव फलमुक्त्वा होतृफलमाह शंसन्तमिति । 'शस्त्र कोविदा' सपादबन्धो मन्त्र ऋक्, तया केवलया स्तुति शस्त्र गीयमानया तया स्तुति स्तोत्रम् "ऋग्भि शंसन्ति, यजुर्भि शंसन्ति, सामभि शंसन्ति" इति यास्कवचनात् । शस्त्रे 'कोविदा' कुशला, फलं पूर्वोक्तमेवानुसन्धेयम् ।

सर्वत्र सामगाना व्यापारमाह, रथन्तरे इति । रथन्तरे गीयते बृहत्साम्नि गीयते सामवेदोऽस्मीति शेष । किं बहुना, सप्तवैते च सामभेदा गीयन्ते इति विपरिणाम । रथन्तर बृहत्साम, वैरूप्य, वैराज, महानाम्नी, रैवती, वामदेव्यम्, इति सप्त सामानि । दोग्ध्री फलं पूर्वोक्तं ददातीति ज्ञेयम् ॥९॥

अथर्वणां व्यापारमाह, मन्त्रेति । मन्त्राश्च उपनिषदश्च

ब्रह्मचारी च व्रात्यश्च स्कम्भोऽथ पलितस्तथा ।
अनड्वान् रोहितोच्छिष्टः पठ्यते भृगुविस्तरे ॥११॥
कालः प्राणश्च भगवानात्मा पुरुष एव च ।
शिवो भवश्च रुद्रश्च ईश्वरः पुरुषस्तथा ॥ १२ ॥
प्रजापतिर्विराट् चैव पार्थिवः सलिलमेव च ।
स्तूयते मन्त्रसंयुक्तैरथर्व-विहितैर्विभुः ॥ १३ ॥
तं षड्विंशकमित्येके सप्तविंशमथापरे ।
पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः ॥१४॥
चतुर्विंशति-सङ्ख्याकमव्यक्तं व्यक्त दर्शनम् ।

---

मन्त्रोपनिषदम् उपनिषच्छब्दोऽकारान्तो नपुंसकमपि ।
'ब्रह्म' ब्रह्माणम् ॥ १० ॥

भार्गव ग्रन्थानां विषयमाह, ब्रह्मचारीत्यादि सार्द्धाभ्याम्। तदीन्द्रियरूपेण भगवतो निरूपणमित्याशयेनाह, स्तूयते इति। 'अथर्वविहितैः' अथर्वप्रतिपाद्यैरर्थैः । 'विभुः' ईश्वरः परमात्मा, षड्विंशकं पौराणिकाः, सप्तविंशं तद्वेदा एव

"मात्रा भूतानीन्द्रियाणि मनो बुद्धिरहङ्कृतिः ।
महान् प्रधानं तत्त्वानि षड्विंशः परमेश्वरः" ॥ इति ।

शिवेन साहित्ये सप्तविंश इति साङ्ख्यायने । अथेति । 'साङ्ख्य' ज्ञानं, तत्सम्बन्धी साङ्ख्य तं ज्ञानगम्यमित्यर्थः ॥११-१४॥

चतुर्विंशति सङ्ख्याकमिति । कपिला चतुर्विंशति सङ्ख्याक मव्यक्तम्, तदुपरितनं पञ्चविंशकमित्यर्थः । तदुक्तम्,—

"मूल प्रकृतिरविकृतिर्महदाद्याः प्रकृति विकृतय सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥ इति ।

अद्वैतं द्वैतमित्याहुस्त्रिधा तं पञ्चधा तथा ॥ १५ ॥
ब्रह्माद्यं स्थावरान्तञ्च पश्यन्ति ज्ञानचक्षुषः ।
तमेकमेव पश्यन्ति परिशुद्धं विभुं द्विजाः ॥ १६ ॥
यस्मिन् सर्वमिदं प्रोतं ब्रह्म स्थावर-जङ्गमम् ।
तस्मिन्नेव लयं यान्ति बुद्बुदाः सागरे यथा ॥ १७॥
यस्मिन् भावाः प्रलीयन्ते लीनाश्चाव्यक्ततां ययुः ।
नश्यन्ति व्यक्ततां भूयो जायन्ते बुद्बुदा इव ॥ १८ ॥
क्षेत्रज्ञाधिष्ठितञ्चैव कारणैर्व्यञ्जयेद्बुधः ।
एवं सहस्रशो देवं पर्यस्यन्तं पुनः पुनः ॥ १९ ॥

---

स्वयम् 'पश्चात्' अमलस्य 'ब्रह्मदर्शनं' व्यक्तस्य जगतो भासकम्, अद्वैतं वेदान्तिनः, द्वैतं काणादाः, त्रिधा गुणभेदेन, पञ्चधा तु भूतभेदेन, "स एकधा भवति, त्रिधा भवति, पञ्चधा भवति, सप्तधा, नवधा, पुनश्चैकादश इति श्रुत्यन्तरात् ॥१५॥

'द्विजाः' त्रैवर्णिका वेदविदः । ब्रह्मेति ब्रह्माद्यं स्थावरादि तस्मिन् प्रोतं तमेकं ब्रह्मैव पश्यन्तीत्यन्वयः । लयं यान्ति सर्वे भावाः 'लीनाश्च' लीनम् आस्य सूक्ष्मं दारमपि व्यालक्ष्य येषां ते तथोक्ता । यस्मिन् प्रोता सन्तो व्यक्तता 'ययुः' गताः पुनर्नश्यन्ते नश्यन्ति भूयश्च व्यक्तता 'जायन्ते' जनयन्ति अन्तर्भावितण्यन्तत्वात् सकर्मकः, गच्छन्ति वा । द्विः कथनं सृष्टिप्रलययोरभ्यास ज्ञापनार्थम् ॥ १६—१८ ॥

क्षेत्रज्ञेन अधिष्ठितं शरीरं, 'कारणैः' अनुमितिकारणैः हेतुभिः, चिन्मयत्वेनाधिष्ठितं क्रियावत्त्वाद्रथादिवदित्यादिभिः 'व्यञ्जयेत्' लक्षयेत, 'बुधः' पण्डितः । एवं सहस्रशः पर्यस्यन्तं

किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं ? किं तद्ध्यानं ? को वा ध्याता, ? कश्चिद्ध्येयः ? इति ।

अथैभ्योऽथर्वा प्रत्युवाच, ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यम् ।

---

सर्वार्थसिद्धिदं शिवमाराध्य विधूतचित्तवातो भगवन्मन्त्रपूजनेन विधूताखिलकल्मषो दैशिकचुडिकोक्तमार्गेण साधित यमादि प्रत्याहारान्त योगाङ्गधारणापूर्वकं ध्यानपथमारुरुक्षुः प्रवीणयोगी मन्त्रस्याप्लुतात् सर्वमन्त्रशिरोमणिं प्रणवमवयवशः स्वरूपतश्च निर्णीय ध्याने विनियोक्तुं पुनः प्रकृत तमेवानुसन्धत्ते, पिप्पलाद इति । अत्र प्रष्टृणां त्रित्वम् एव्य इत्यत्रेऽनुवादादवसीयते । आख्यायिका तु विद्या स्तुत्यर्था ॥ १ ॥

प्रश्नानाह, किमादावित्यादि । 'आदौ' सर्वमन्त्रादौ सर्ववेदादौ मुख्यत्वेन च प्रयुक्तं, ध्यायते यत्तदिति व्युत्पत्त्या 'ध्यानं' ध्येयं 'ध्यायितव्यं' ध्यानार्हं किमित्यर्थः । अत्र छान्दसविद्वत् षट् । प्रथमप्रयुक्तो ध्येयश्च मन्त्रः क इति प्रथमप्रश्नार्थः । किं तद्ध्यानमिति । 'तस्य' ध्यातव्यस्य मन्त्रस्य किं ध्यानमिति द्वितीयः प्रश्नः । को वा 'ध्याता' अधिकारी इति तृतीयः । कश्च 'ध्येयः ईशः' इति चतुर्थः । 'चित्' इति वितर्के, को देवो ध्येयः ? इति विचार्य्य कथ्यमित्यर्थः । इति षण्ण प्रश्नसमाप्तौ ।

आथर्वणोत्तरमाह, ओमित्येतदक्षरमिति । सर्वस्य वेदस्य मन्त्रब्राह्मणादेर्देवता ध्यानस्य च 'आदौ' प्रथमं प्रयुक्तम् 'आदौ' ईश्वरं वाचकत्वेन प्रतिनिधित्वेन वा प्रयुक्तमित्यर्थः ।

## रुचिरा भास्वती स्वभा,

प्रथमा रक्ता ब्राह्मी ब्रह्मदेवत्या। द्वितीया शुभ्रा रौद्री रुद्रदेवत्या। तृतीया कृष्णा विष्णुमती विष्णुदेवत्या। चतुर्थी विद्युन्मती सर्ववर्णा पुरुषदेवत्या। स एष ह्योङ्कारश्चतुष्पाच्चतुःशिराः।

---

पाठेऽपठितत्वात्, अन्यथा पादाश्चत्वार इत्यत्र छन्दांसि चत्वारीति च पठेत्, वर्णावसानत्वाच्चार्धमात्रा तुर्या, अत्र वर्णधर्मो छन्दसोऽसम्भवात्। नारसिंहे तु विराडित्यपि पठितं, तच्चौपचारिकं छन्दस्त्वं बोध्यम्। एकरूपिणीमाश्रित्य।

मूर्धन्यवस्थितायास्तु मात्राया ध्यानमाह, रुचिरेति। 'रुचिरा' रम्या 'भास्वती' दीप्तिमती 'स्वभा' अन्यनिरपेक्ष प्रकाशा।

इदानीं मात्राणां वर्णानाह, प्रथमेति। रक्ता वर्णेन सृष्टि हेतुत्वेन राजसत्वात्, 'ब्राह्मी' ब्रह्मवती, अग्रे विष्णुमतीत्युक्तत्वात्। ब्रह्मा देवतापि तटस्थो भविष्यति, न सम्बन्ध इति शङ्कानिरासाय ब्राह्मीत्युक्तम्। 'शुभ्रा' शुक्ला चन्द्रसन्निभा 'रौद्री' नित्य सन्निहितरुद्रा, 'पुरुष' ईश्वरः।

यद्यपि ब्रह्मविद्योपनिषदि अकारादीनां क्रमेण ब्रह्म विष्णु रुद्रा देवता उक्ता, तथा तृतीया मात्रा "मकारस्त्वग्नि सङ्काशा विधूमो विद्युतोपमः" इत्युक्तम्, अत्र तु ब्रह्म रुद्र विष्णवो देवता उक्ता तथा तृतीया मात्रा च कृष्णा उक्ता इति विरोधः। तथा अथर्वशिरसि "या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन" इति देवता वर्णविपर्यास उक्त,

चतुर्थ्यर्धमात्रा स्थूल-ह्रस्व दीर्घ प्लुतः ॥

ओमोमोमिति त्रिरुक्त्वा चतुर्थं शान्तात्मा प्लुतप्रयोगेन समस्तमित्यात्मज्योतिः सकृदावर्त्तव्यः ।

---

तथापि वस्तुतो ब्रह्मादीनां यथायामिकरूपत्वादुपासनाङ्गत्वेन फलभेदाय तत्तद्रूपोपादानम् । एतेन वर्णभेदोऽपि परिहृतः, ध्यानभेदेन फलभेदात् अतएव कालाग्निरुद्रोपनिषदि महेश्वर सदाशिव शिवा शिवं प्रति प्रणव वर्णचये देवा उक्ताः , आगमेषु क्वचित् सात्त्विकादिभेदेन एकस्या एव देवतायास्त्रिधा ध्यानमुक्तम् वास्तवस्थितिस्त्वेवं पश्यति,—

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च ।

पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते" ॥ इति ॥

कल्पभेदेन वा ब्रह्मादीनामुत्पत्तिक्रमे भेदः । चत्वारः 'पादा अकारोकारमकारार्द्धमात्राः विश्वतैजसप्राज्ञतुरीयलक्षणा यस्य, स चतुष्पाद्, चत्वारि 'शिरांसि उत्तमाङ्गानि मुखस्थानीयानि अग्नयो यस्य, स चतुःशिराः । अकारादीनां पादत्वं प्राथम्यात्, सर्वधर्माश्रयत्वाच्च अग्नीनां मुखत्वं "मुखादग्निरजायत" इति श्रुतेः अग्नेः तथैव मुखत्वादस्य निर्दिष्टत्वाच्च द्रष्टव्यम् ।

स्थूलं रूपं त्रिधा विभज्य सूक्ष्मं पृथक् करोति, चतुर्थीति । चतुर्थ्यर्धमात्रा नादरूपा सूक्ष्माकारा । स्थूले विभागमाह स्थूलेति । यः स्थूलः वर्णकूटरूपः प्रणवः स ह्रस्वदीर्घप्लुतः उद्देश्यविधेययोरपि विशेषणविशेष्यत्वमात्रविवक्षया समासः ।

ह्रस्वादीनां स्वरूपमभिनीय दर्शयति ओमोमोमिति । प्रथमः एकमात्रः, द्वितीयो द्विमात्रः, तृतीयस्त्रिमात्र इत्यर्थः ।

स एष सर्वान् प्राणान् सकृदुच्चारितमात्रः,
स एष चूर्द्धमुत्क्रामयतीत्योङ्कारः ॥ १ ॥
प्रणवः सर्वान् प्राणान् प्रणामयति नामयति

---

नन्वेवं ह्रस्वो नाप्नोति कथं ह्रस्व ओङ्कारः ? नैषः दोषः, पार्षदस्मृतिरियम्, यथा तत्रभवतां नारायणीयानां सुजात एष अश्व सूनृत अध्वर्यो ओम् अद्रिः सुतमिति व्याकरणात् सिद्धे प्रयोगे तस्य ह्रस्वत्वं नास्तीत्यर्थः इति विरम्य इत्यभिनीय तस्योपसंहारः ।

चतुर्थः पादः क्व वर्त्तते ? अत आह, प्लुतप्रयोगे इति । वर्त्तते इति शेषः, तत्रैवाभिव्यक्तत्वात् ; 'नवमम्' अनुपमं रूपम्, 'इति' हेतोः व्याकरणोतिमत् । विरम्यमाण-घण्टानादाद्युपमापि न भवति, ततोऽप्यतिसूक्ष्मत्वात् । 'सकृदावर्त्तव्यः' सकृदावर्त्तयितव्यः अनाहत-शब्दरूप इत्यर्थः । यदा सकृद्विभागः तदापि कुतो भवतीति चेत् ? श्रूयतां, निर्विशेषत्वात् पूर्वापरविभागे भेदकाभावात्, तथा निर्विशेषत्वात् पूर्वापरावृत्तौ भेदकाभावात् सकृदावर्त्तव्यः शब्दब्रह्मस्वरूपः ।

स एष इति । वर्णित-प्रणवस्योपसंहारः । ओङ्कार-शब्दस्य प्रवृत्ति-निमित्तमाह, सर्वान् प्राणानिति । 'प्राणाः' दशवायवः ; तान् समनस्कान् सर्वान् षट्चक्र-भेदनेन सुषुम्णाद्वारेण मूर्द्धानमानयतीत्यर्थः । पुन स एष इत्यनुवाद आदरार्थः । अनेकार्थत्वान्निपातानाम् । ओमित्यूर्द्ध्वभावे ऊर्द्ध्वान् प्राणान् कारयति उच्चारयितुरित्योङ्कार इति ओमित्यस्य शेष इतिभावः ।

तस्य नामान्तरमाह, प्रणव इति । प्रणवशब्द-निमित्त-

वै; तस्मात् प्रणवश्चतुर्धावस्थितः इति वेद-देवयोनिः, धियायेति सम्भर्त्ता सर्वेभ्यो दुःख-भयेभ्यः सन्तारयति ।

तारणात्तानि सर्वाणीति विष्णुः सर्वान् जयति, ब्रह्मादिवत् सर्वकारणानि समप्रतिष्ठाप्य ध्यानात् ।

---

मात्र, सर्वोमिति । 'प्रणव' मन्त्रमापादम, मात्राम् अमृभा यापादनम् । चतुर्धा यतोऽवस्थित, ततश्चतुर्धा वेदानां देवानाञ्च योनिः, अनेन क्रमेण पूर्वत्रापि वेदाश्चत्वारो देवाश्चत्वार इति पाठेन भवितव्यम् । साम्प्रदायिकैर्निर्णयो विधेय ।

किं तदात्मनिति यत् पृष्टं, तदुत्तरं निगमयति, धेयायेति । ध्या धातो रूपं, ध्यातव्या धारणीयाः पादादयो मुख्या न त्याज्या ध्यातव्या इत्यर्थं । धारणस्य फलमाह, सम्भर्त्तेति । 'सम्भर्त्ता' एव हि पादादीनां धारयिता तारयति चाश्रितान्, तस्य किं वक्तव्यम् ।

को ध्याता ? इति प्रश्न ध्यातृ तथा विष्णु निदर्शनेनोत्तरयति, तारणात्तानीति । 'तारणेन' चाश्रितानां दुःखभयान मयनेन 'अमृतानि', बहुत्वे लिङ्ग, छान्दसो वर्णाभाव, एतानि अभिभूतानि दुःखभयानि सर्वाणि 'इति' ईतो विष्णुः सर्वान् 'जयति' अभिभवति देवादीन् । अथवा 'तारणात्' तारकत्वादेतो 'तानि' पादादीनि सर्वाणीति पूर्वोक्त प्रकारेण विष्णुर्ध्यानमात्रमिति शेष ।

ध्यानफलमाह, सर्वान् जयतीति । अथ ब्रह्मादि 'वह्वत्' इवत्' गतवान्, कथात् ? 'सर्वकारणानि' सर्वेन्द्रियाणि

विष्णुर्मनसि नादान्ते परमात्मनि स्थाप्य ध्येयमीशान प्रध्यायन्तीशा वा सर्वमिदं प्रयुक्तम्।

ब्रह्म विष्णु-रुद्रेन्द्रा. सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतानि, कारण सर्वैश्वर्य्य सम्पन्न शिवमाकाश मध्य ध्रुवस्थम् ।

---

'सम्प्रतिष्ठाप्य' स्थिरीकृत्य ध्यानात्, विष्णु ब्रह्मणोर्ध्यानकथनेन तत्फलार्थो ध्यातेत्युक्त भवति ।

कथिदेय ? इति चतुर्थमुत्तरयति, विष्णुर्मनसीति। नादान्ते प्रतिष्ठाय शान्ते ब्रह्मणि, प्रणवो हि पञ्चकूटात्मक अकारोकार मकार विन्दु नादात्मक तत्र नादान्ते परमात्म स्थाने 'स्थाप्य' धारय्य 'ध्येय' ध्यानाचितम ईशान मनसि विष्णु 'प्रध्यायन्ति' प्रध्यायतीत्यर्थं । वचन व्यत्ययोऽन्येषा मपि ईशस्य ध्येयत्वसूचनाय ।

ननु अन्यान् देवानपहाय ईशान एव किमिति ध्येय ? अत आह, ईशा वेति। वा शब्द एवार्थ, ईशैव सर्वमिद प्रयुक्त मान्यत ।

ननु भवतु सर्व प्रयुक्त, न तु ब्रह्मादय इत्यत आह, ब्रह्मेति। 'इन्द्र' मघवा, एते चत्वार ईशा 'सम्प्रसूयन्ते' जन्यन्ते, सह भूतानि, भूतसहितानि इन्द्रियाणि ईशा सम्प्रसूयन्ते ।

पुन किं किमीया प्रयुक्तम् ? अत आह, कारणमिति। 'कारण' साधकतमम् उपायभूत, साधकतम सर्वमेव ईशा प्रयुक्तमित्यर्थ, स हि प्रथमसुपायबोधक, 'ऐश्वर्य्य' प्रभुत्वाति सम्पन्नम् । कार्यभाव निदर्शनाय सर्वकार्य्य मूर्द्धन्यमाकाश माह, शिवमिति। 'शिव' निर्मल 'मध्ये' सर्वस्थानां 'ध्रुवम्'

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च ।
पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते ॥

तत्राधिकं क्षणमेकमास्थाय क्रतुशतस्यापि फलमवाप्नोति, कृत्स्नमोङ्कारगतञ्च सर्वज्ञानयोगध्यानानां शिव एक एव ध्येयः, शिव ओङ्कारः, सर्वमन्यत् परित्यज्य एतामधीत्य द्विजो गर्भवासान्मुच्यते, गर्भवासान्मुच्यते ॥ २ ॥

इत्यथर्वशिखोपनिषत् समाप्ता ॥ १५ ॥

---

एकरूपेण तिष्ठति। मध्ये हृदयम् आकाशम् ईशा प्रयुक्त, तत्र वाय्वादीनामुपलक्षणं यद्वा सम्यगादि चतुष्टयं शिवस्य विशेषण जगत्स्वभावानिवृत्तये।

माहात्म्यकथनेन स्तुवितां प्रणवस्य पञ्चकूटतामाह, ब्रह्मेति। 'पञ्चधा' अकारादिरूपेण।

पञ्चात्मकस्य ध्याने फलमाह, तत्रेति। तत्राधिके फलाधिक्यमिति न्यायात्। कृत्स्नमोङ्कारगतश्चेति। 'कृत्स्नम्' ओङ्कारपादादि सर्वं ओङ्कारगतञ्च ध्यात्वा क्रतुशतस्यापि फलमवाप्नोतीत्युपपद्यते।

परमोपदेशमाह, सर्वमन्यत् परित्यज्येति। ध्यानेन सम्बध्यते। शिव एव परमो ध्येय इति चतुर्थसूत्रमुपसंहरन् तदध्ययनफलमाह एतामिति। 'एताम्' उपनिषदम् अथर्व-शिखां स्वशाखाम्। द्विज इति शूद्रनिरासः। द्विरुक्तिः समाप्त्यर्था, इति सन्दर्भः।

# ब्रह्मोपनिषत्।

ओं शौनको ह वै महाशालोऽङ्गिरसं भगवन्तं पिप्पलादं पप्रच्छ।

दिव्ये ब्रह्मपुरे रम्ये सम्प्रतिष्ठिता भवन्ति कथं ? सृजन्ति ? कस्यैष महिमा बभूव ? यो ह्येष महिमा बभूव, क एष ?।

---

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद वाक्यानां दीपिकाथर्वशिखिके॥
इत्यथर्वशिखोपनिषद्दीपिका सम्पूर्णा॥ १५॥

---

ब्रह्मोपनिषदारब्धा ब्रह्मज्ञान प्रदायिनी।
चतुष्खण्डा तु दशमी प्रमितानां हृदयङ्गमा॥ १॥

इदानीं चतुरवस्थस्य चतुः स्थानस्य दशात्मनो ? निर्गुण ध्यानसिद्धये स्वस्वरूप सर्वं वक्तव्यमिति ब्रह्मोपनिषदारभ्यते, ओं शौनक इति। "ओम् अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति, नाभि हृदयं कण्ठ मूर्द्धेति"। तत्र चतुष्पाद ब्रह्म विभातीति ग्रन्थो द्वितीयखण्डादौ पठित प्रथमखण्डादा वपि केचित् पठन्ति, स पाठो नातिप्रयोजन, अर्थसम्बन्धा भावात्। 'महाशाल' महत्य शाला गृहा यस्य स तथा 'अङ्गिरस' गोत्रत अपत्यापत्यस्य अवान्तरभेदोपचारात् पिप्पलादं नामत 'पप्रच्छ' पृष्टवान्।

प्रश्नानाह, दिव्य इति। 'दिव्ये वागादिदेव निवासार्हे ब्रह्मोपलब्धस्थाने 'ब्रह्मपुरे' शरीरे सम्प्रतिष्ठिता भवन्ति वागा दय कथम्? इति शेष। किमाधारा वागादय शरीरे प्रति ष्ठिता ? इति प्रथम प्रश्न। सृजन्तीत्यत्रापि कथमिति

तस्मै स होवाच ब्रह्म-विद्यां वरिष्ठां प्राणो ह्येष आत्मा, आत्मनो महिमा बभूव।

देवानामायुः, स देवानां निधनमनिधनम्।

दिव्ये ब्रह्मपुरे, विरजं निष्कलं शुभ्रमक्षरं यद् ब्रह्म विभाति, स नियच्छति।

---

सम्बध्यते, किं बलेन स्वस्वविषयेषु व्याप्रियन्ते ? इत्यर्थः; एष द्वितीयः प्रश्नः। कश्चैष महिमा ? कुतादि-विस्तारो जात इति तृतीयः। यो हि एक एव प्रश्नाच महिमा बभूव, स एव किमात्मकः ? महिम तस्य प्रश्नद्वारा प्रश्नत एव तत्त्वं 'द्रष्टुं वेदितव्यमिति चतुर्थः।

उत्तरमाह, तस्मै इति। 'सः' पिप्पलादयः 'ह' प्रसिद्धो '*उवाच*' *परितो विचार्य समापे ब्रह्म विद्यां,* सर्वैरपि प्रश्नैः ब्रह्मण एव पृष्टत्वात् ब्रह्मविद्येयम्, 'वरिष्ठाम्' अतिशयवतीं; प्राणो ह्येष इति। किं भौतिकः ? नेत्याह, आत्मेति। यस्मिन् देवाः प्रतिष्ठिताः, यदधीन च सत्ताऽस्ति, यश्चैष महिमा, यश्च महिम्नस्तत्त्वं स एव आत्मेत्यर्थः; सामान्येनेदं चतुर्णामप्युत्तरम्, आत्मनः प्राणत्वं प्राणाश्रयत्वात्, अतएव तथा प्राण इति भगवत् सूत्रम्। विशेषेण तृतीयस्योत्तरमाह, आत्मन इति।

प्रथमस्य विशेषत उत्तरमाह, देवानामिति। 'देवानां' वागादीनाम् 'आयु' जीवितम्, आत्मा को ह्येवान्यात् कः प्राण्यादेव 'आत्मा आनन्दो न स्यात्' इति श्रुतेः।

आत्मसत्तयैव तेषां सत्तालाभात्, तदेव विवृण्वन्नाह, स इति। '*निधन*' मरणम्, 'अनिधन' जीवनम्।

स क्वास्तीत्याकाङ्क्षायामाह, दिव्ये ब्रह्मपुरे इति। चतुर्थमुत्तर-

मधुकर-राजानं माचीकवत्। यथा माचीकेकेन तन्तुना जालं विक्षिपति, तेनापकर्षति। तथैवैष प्राणः यदा याति संसृष्टमाकृष्य।

---

यति, विरजमित्यादि। यत् 'ब्रह्म' परमात्मा 'विभाति' प्रकाशते तत् 'विरजं' निरवद्यमस्त, 'निष्कलं' कलाविद्याकार्यं प्राणादि, तद्रहितम्। निषेधमुखेनोक्ता विधिमुखेनाप्याह, शुभ्रमिति, 'शुभ्रम' उज्ज्वलं प्रकाशात्मकम् 'अक्षरम्' अश्नुते व्याप्नोति, अश्नोतेर्वाऽक्षराऽक्षरमिति श्रुते।

अथ यजन्तीत्यस्य द्वितीयस्योत्तर, स इति। 'नियच्छति' नियमनं करोति। नियमनं बृहदारण्यके अन्तर्यामिब्राह्मणे, "य पृथिव्यां तिष्ठन् पृथिव्या अन्तर, य पृथिवीं यमयति, य पृथिवी न वेद, एष त आत्मा अन्तर्याम्यमृत" इत्यादि चतुर्विंशतिभि पर्यायैर्व्याख्यातम्।

तत्र प्रत्येक पृथिव्यादीना नियन्तृत्वमुक्त, अत्र तु एकधा इत्याह, मधुकर राजानमिति। 'मधुकरा' इन्द्रियाणि तेषा 'राजान' तदभिमानिनं जीवं नियच्छति तेन सर्वाणि नियन्तानि इत्युक्त भवति। समासान्तविधेरनित्यत्वादच् न कृत। एतस्य सहनियन्तृत्वे दृष्टान्तमाह, माचीकवदिति। मक्षिकाभिर्जीवति 'माचीक' ऊर्णनाभो लूताख्य कीटविशेष, तद्वत्। तद्विवृणोति, यथेति। यथा माचीका, छान्दसमीकारस्य दीर्घत्व, टाप् च, लूता एकेन 'तन्तुना' लालारूपेण द्वाविंश 'जाल' संकुलाय 'विक्षिपति' स्वशरीरात् बहि, करोति, 'तेनैव' एकेन तन्तुना 'अपकर्षति' तत्स्थानादन्तर्नयति। प्रकृते,—

प्राणदेवतास्ताः सर्वा नाड्यः सुषुप्ते श्येनाकाशवत्, यथा खं श्येनमाश्रित्य याति स्वमालयमेवं सुप्तः ।

ब्रूते, यथैवेष देवदत्तो यष्ट्यादिना ताडा-

---

"ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि ।
जाग्रत् स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः" ॥ इति ।

सूत्रस्थानीय आत्मा, तन्तुस्थानीयः प्राणः, जालस्थानीयं वागादि । यथायं दृष्टान्तः, तथैवैष प्राणो यदा 'याति' गच्छति, तदा सहष्टमाकृष्य गच्छति, वागादि सहात तस्यैत्यैव याति, यथोक्तम्,—"यथा सुहय पड्विश शङ्कून् संखिदेत्, एवमितरान् प्राणान् समखिदद्दिति"।

ननु वागाद्याकर्षणे प्राणस्य तैः का सम्बन्धः ? इति प्रश्ने, नाडीद्वारक इत्युत्तरिते, नाडीभिः प्राणस्य कः सम्बन्धः ? इति शङ्का स्यात्, तामपनेतुमाह, प्राणेति । प्राणो देवता यासां ताः प्राणदेवताः 'ताः' पूर्वोक्ताः सर्वाः 'नाड्यः' सुषुम्णाद्याः । यातीत्युक्तम्, तत् कदा ? इत्यपेक्षायामाह, सुषुप्ते इति । सुतरां स्वपनं 'सुस्वप' सुषुप्तिः, तत्र सुषुप्तिकाले यातीत्यर्थः । एतत् मरणमूर्च्छादेरप्युपलक्षणम् । क्व यातीति प्रश्ने स्वालयं यातीत्युत्तरम्, तत्र दृष्टान्तः, श्येनाकाशवदिति । विवरणं यथेति । श्येनो यथा 'खम्' आकाशमाश्रित्य स्वालयं याति, तथा सुप्तः 'स्वालयं' ब्रह्म याति ।

कथं ज्ञायते स्वालयं ब्रह्म याति, न यत्र कुत्रचित् ? इति पृष्टे उत्तरमाह, ब्रूते इति । उत्थितः सन् सुखमहमस्वाप्समिति

मानो न यति, एवमिष्टापूर्त्तैः शुभाशुभैर्न लिप्यते।
यथा कुमारो निष्काम आनन्दमुपयाति,
तथैवैष देवदत्त स्वप्ने आनन्दमभियाति।
वेद एव परं ज्योतिर्ज्योतिष्कामो ज्योतिरानन्दयते॥

---

लोकान् वदति, तेन आनन्दं स्वाम्य गत, आनन्दाद्यागत इति ज्ञायते, आनन्दश्च ब्रह्म।

ननु शुभाशुभेषु कर्मसु सत्सु कथमानन्दानुभव सुषुप्तेऽपि स्यात्? इत्याशङ्क्य शुभाशुभाभाव प्रतिपादयितु दृष्टान्तमाह, यथैवैष इति। यथैव एष देवदत्त 'यश्चादिना' पाठेनापि साध्यमानो 'न यति' न याति छान्दसो ह्रस्व, न गच्छति न पलायते, सुषुप्ते तत् कस्य हेतो? इतरानुभवाभावादित्येव तदपि कुत? कारणाधर्म्माभावादेव एवमनेन निदर्शनेन 'इष्टापूर्त्तैः' इष्टापूर्त्तयो कर्त्ता तत्फलेन लिप्यते।

ननु यथा सुषुप्ते दुःखहेतुरधर्म्मो नास्ति, तथा सुखहेतु धर्म्मोऽपि नास्ति, तत् कुत आनन्दानुभव? इत्याशङ्क्य, यद्यपि धर्म्महेतुक आनन्दो नास्ति, तथापि नित्यानन्दो वर्त्तते, सोऽनुभूयते इत्युत्तरिते, किं तत्र प्रमाणम्? इति दृष्टे अनुभव प्रमाणयति, यथेति। ननु तथापि क्रीडनकादि निमित्त आनन्दो भविष्यतीत्यत आह, निष्काम इति। तदुक्तम् —

द्वावेव चिन्तयामुक्तौ परमानन्द सम्प्लुतौ।
यो विमुग्धो जडो बालो यो गुणेभ्य परङ्गत" ॥ इति।

'स्वप्ने' सुषुप्ते।

नन्वानन्द सुख तत् सुषुप्तौ ज्ञानाभावेन कथं ज्ञायते?

आदित्यस्थ' सर्वकार्यैककारणात्मा, अन्य व्याख्यातम्, शिवरूपं, मङ्गलस्वरूप ब्रह्म 'अस्मि' भवामि ॥ २० ॥

इदानीं सर्वकारणहीनस्य सर्वज्ञतां स्वस्याह, 'अपाणि पाद' पाणिपादहीन, अन्य व्याख्यातम, 'अचिन्त्यशक्ति' दुर्बोधशक्ति, एवम्भूतोऽपि जवनो ग्रहीतवेग इत्यर्थं, 'पश्यामि' अवलोकयामि, स 'अचक्षु' चक्षुषा हीन, स अचक्षु द्रष्टा, 'शृणोमि' श्रवण करोमि 'अकर्ण' कर्णरहित', अन्य व्याख्यातम; 'विजानामि' विविध प्रपञ्चजातम् अवगच्छामि, 'विविक्तरूप' बुद्ध्यादि पृथग्रूप, 'न चास्ति' नास्त्येव, 'वेत्ता' कर्म-कर्त्तृभावनावगन्ता, 'मम' आनन्दात्मनो भेदरहितस्य 'चित्' स्वयप्रकाशबोधस्वभाव 'सदा' सर्वदा, अन्य व्याख्यातम् ॥ २१ ॥

इदानीं सर्वशास्त्रप्रतिपाद्यस्यात्मन सर्वविकारभाव दर्शयति, 'वेदै' ऋगादिभि 'अनेकै' बहुभि, अहमेव व्याख्यातम, 'वेद्य' प्रतिपाद्य, 'वेदान्तकृत्' वेदान्तसूत्रकृत् वेदव्यासरूप, 'वेदविदेव च वेदान्तकृतो विशेषणम्; वेदाना साङ्गाना सावरविद्यास्थानानां वेत्ता वेदवित् स एव, न त्वन्य, चाशब्दादनेकतप सम्पन्नस, अन्य व्याख्यातम्, अनेन विभूति मत्स्वेष्विदमिव प्रधानमित्युक्तम्। 'न पुण्यपापे' मम स्पष्टम्, न स्त इति शेष, 'नास्ति नाश' विनाशो न विद्यते ममेत्यनुषङ्ग, 'न जन्म' जनि न मम अस्तीत्यनुषङ्ग; 'देहेन्द्रिय बुद्धि' देहश्च इन्द्रियाणि च बुद्धयश्च देहेन्द्रिय बुद्धि 'नास्ति न विद्यते, ममेत्यनुषङ्ग ॥ २२ ॥

'न भूमिरापो मम पृथिवी सोदका मम नास्ति इत्यनुषङ्ग, 'वह्नि' प्रसिद्ध 'नास्ति' न विद्यते, ममेत्यनुषङ्ग, 'न चानिलो मेऽस्ति' वायुरपि मम न विद्यते, चकारात् वायवीय कार्यं